# श्रीमद्भागवतम् ॥

महर्षिप्रवर श्रीकृष्णद्वैपायन प्रणीतम् ।

श्रीश्रीपाद श्रीधरस्वामिकृत भावार्थ दीपिका श्रीराधारमणदास गोस्वामि विरचित दीपिन्याख्य तट्टिप्पणी श्रीमद्वीरराघवाचार्य्यकृतभागवतचंद्रिका श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी श्रीगौडीय वैष्णवाचार्य्यप्रवर श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भ श्रीमद्विश्वनाथचक्रवर्त्ति कृत सारार्थदर्शिनी तथा श्रीनिम्बार्क सम्प्रदायि श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपाख्य टीका समेतम् भाषानुवादसहितञ्च ।

परमहंस परिव्राजकाचार्य्य श्रीमद् स्वामि प्रकाशानन्दसरस्वती पूज्यपादशिष्य

श्रीनित्यस्वरूपब्रह्मचारिणा ।

सम्पादितम् ।

वङ्गदेशान्तर्गत ताड़ास भूपति श्रीराधाविनोद प्रेम सेवा परायण राजर्षि राय

श्री वनमालि राय वहादुरस्य

सम्पूर्ण साहाय्येन

प्रकाशितञ्च ।

निगमकल्पतरोगलितं फलं, शुकमुखादमृतद्रवसंयुतम् ।

पिबत भागवतं रसमालयं, मुहुरहो रसिका भुवि भावुकाः ॥

श्रीवृन्दावनधामनि ।

श्रीमद्देवकीनन्दनाख्य स्वकीये यन्त्रे श्रीनित्यस्व[illegible]

मुद्रितम्

सम्वत् १९६०

# श्रीमद्भागवतम् ।

## तृतीयस्कन्धः ।

### प्रथमोऽध्यायः ।

ॐ नमो भगवते वासुदेवाय ।

श्रीशुक उवाच ।

एवमेतत् पुरा पृष्टो मैत्रेयो भगवान् किल ।
क्षत्रा वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत् ॥ १ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

तृतीयेतु त्रयस्त्रिंशदध्यायैः सर्गवर्णनं ।
लोककथा गुणक्षोभात् सर्गो ब्रह्माण्डसम्भवः ।
तत्रतु प्रथमेऽध्याये बन्धून् हित्वा गतायुषः ।
निर्गतस्योद्धवेनादौ सम्वादः क्षत्तुरुच्यते ।

अथ तृतीयस्कन्धव्याख्या ।

भगवद्ब्रह्मसंप्रोक्तं संक्षिप्तं वर्णितं पुरा ।
प्राह भागवतं शेषप्रोक्तं विस्तरतः पुनः ॥ ० ॥

द्वेधाहि भागवतसंप्रदाय प्रवृत्तिः । एकतः संक्षेपतः श्रीनारायणाद्ब्रह्म नारदादि द्वारेण । अन्यतस्तु विस्तरतः शेषात् सनत्कुमार सांख्यायनादि द्वारेण । तत्र द्वितीयस्कन्धे श्रीनारायण ब्रह्म सम्वादेन संक्षेपतः चतुःश्लोक्या श्रीभागवतं निरूपितं तदेव ब्रह्म नारद सम्वादेन द्वारा लक्षणतया किञ्चिद्विस्तरेणोक्तं । तदेव शेषोक्तमिति विस्तरतो वक्तुं तृतीयाद्यारम्भः । अत्र तृतीये प्रथमं क्षत्तु मैत्रेय संगमः चतुर्भिरध्यायैः । ततोऽष्टभिः सविसर्गः सर्गप्रपञ्चः । ततो विसर्गप्रस्तावेन सप्तभिर्वराहावतारः । तत एकेन विसर्ग समाहारः । तत् प्रसंगेन चतुर्भिः कपिलावतारः । ततो नवभिः कपिलाख्यानमिति त्रयस्त्रिंशदध्यायैस्तृतीयस्कन्धप्रवृत्तिः । तत्र द्वितीयान्ते । परिमाणञ्च कालस्य कल्पलक्षण विग्रहं । यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु इति प्रतिज्ञातमर्थं विस्तरेण निरूपयितुमितिहासं प्रस्तौति भगवान् शुकः । एवमिति द्वाभ्यां ऋद्धिमत् सर्वसम्पद्भिः सम्पूर्णम् ॥ १ ॥

---

श्रीराधारमणदासगोस्वामिविरचित दीपिन्याख्यतट्टिप्पणी
श्री चैतन्यंसावधूतंसाद्वैतंचतथाप्रभुम्
श्रीमद्गोपालभट्टंचवन्देव्याख्यांसमारभे ॥ १ ॥

तत्रश्रीधरनामायतीन्द्रः सर्गादिदशलक्षणानिद्वादशस्कंधेस-र्वेत्रस्थितान्यपि प्राधान्येनतृतीयादिदशस्कन्धेषुयोजयिष्यन् आदौ तृतीयार्थमाह तृतीयेत्विति तत्रसर्गलक्षणंद्विश्लोक्येति तत्रत्रयस्त्रिंश-दध्यायमध्ये बन्धून्धृतराष्ट्रादीन् भक्तापराधित्वाद्गतायुषोजीवन्मृतान् संवादः प्रश्नोत्तरकथा क्षत्तुर्विदुरस्य अथ द्वितीयव्याख्यानंतरं भगवद्ब्रह्मसंप्रोक्तं भगवताब्रह्मणोसंशयसंदेहनिरासपूर्वकमुक्तंब्रह्मणाचनारदायतथैवोक्तं भागवतंसंक्षिप्तंयथास्यात्तथा श्रीशुकेनवर्णितम् द्वेधाहिप्रकारद्वयेन एकतएकप्रकारेण अन्यतःप्रकारांतरेण प्रकारभेदश्चसंक्षेपविस्तरशब्दानुपूर्वीविषयोव्याख्येयः तात्पर्ययोऽविशेषात् तत्रप्रकारद्वयमध्ये पुनस्तत्र तृतीयादिमध्ये सविसर्गःकारणसृष्टिसहितः सर्गप्रपञ्चकार्यसृष्टिविस्तारः तत्प्रसंगेन विसर्गसमाहारप्रसंगेन प्रवृत्तिः प्रचारः तत्र एवंसति अर्थकालपरिमाणादिलक्षणमेवं यथा त्वं पृच्छसि तथा एतत्कालपरिमाणाद्यर्थजातं प्रति ॥ १ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रिका
श्रीमतेरामानुजायनमः

अथभगवान्बादरायणिः पूर्वस्कंधांते यथापुरस्ताद्व्याख्यास्येपाद्मंकल्पमथोशृणुवितिज्ञातमर्थंप्रतिपिपादयिषुः स्वप्रतिपिपादयिषितस्यप्रामाणिकत्वप्रथिम्ने विदुरमैत्रेयसंवादं प्रस्तौत्यन्भवताहमिव मैत्रेयोऽपिविदुरेणपृष्ट इत्याह श्लोकद्वयेन एवमिति वः पांडवानांमंत्रकृद्दौत्यकर्त्ताऽखिलेश्वरः समस्तदेवभूतो भगवान् विदुरः आत्मसात्कृतंस्वकीयत्वबुद्ध्यापरिगृहीतंपौरवेंद्रगृहंपौरवेंद्रोधृतराष्ट्रस्तस्य गृहंहित्वात्यक्त्वायद्वायदावाप्रविवेशवनमितिशेषः तदाऋद्धिमत्संपन्नंस्वगृहंत्यक्त्वावनंप्रविष्टेनक्षत्राविदुरेण भगवान्मैत्रेयोभिप्रस्तुतः कौषारविः एतद्भगवताकृष्णप्रत्येवंभवदीयप्रश्नानुसारेणपुरापृष्टः त्यक्त्वास्वगृहमितिपौरवेंद्रगृहंहित्वेतिचकापिकोमानसश्चत्यागोविवक्षितः अतोनपौनरुक्त्यं गृहस्य ऋद्धिमत्त्वहेतुतयाभगवानखिलेश्वर इति श्रीकृष्णस्यपौरवेंद्रगृहप्रवेशकथनमसंगतंतद्गृहस्य भगवन्निग्रहविषयतयाविनंक्ष्यमाणत्वेनऋद्धिमत्त्वंवर्णमासंगत्याद्विलेतिपदास्वारस्याच्च ॥ १ ॥ २ ॥

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

श्रीवेदव्यासनमः॥

यल्लीलाजलराशिलोललहरीक्लान्तक्षमाणांनृणांसंसारोदधिरााशु शुष्यतितरामगम्युसशुष्कैधवत्॥ यस्माद्विश्वमशेषमुद्भवतियस्तत्त्वं परंयोगिनांश्रीमंतंतमुपास्महेसुमनसामिष्टप्रदंविट्ठलम्॥ १॥

अगाधश्रीमद्भागवतजलराशौमांणिगणंतृतीयस्कंधोद्भ्रमनव गाहंमृगयति। निमज्ज्योन्मज्यार्थेऽनुप्रदमनुरक्तेऽमलाधियःकृपाले-शंसंतःखलुविदधतांमय्यनुपदम्॥ २॥

अत्रमुमुक्षूणांस्वस्वयोग्यभगवदपरोक्षज्ञानोत्पत्तौप्रधानसाधनंभक्तिरेवतत्साधनमितरत्सर्वमितिप्रपंच्यते तत्रसूतःशौनकप्रश्नपरिहाराय शुक परीक्षित्संवादंकथयतिएवमितियथाहंचत्वयाएतत्प्रमेयंप्रतिष्टष्ट एवं तथाक्षत्रापिविदुरेणापिभगवांस्त्रिकालज्ञोमैत्रेयःपृष्टइत्यन्वयः। ऋद्धिमत्स्वगृहंत्यक्त्वेत्यनेनवैराग्यंप्रथमसाधनमितिसूचितम्॥ १॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

श्रीमद्राधागोविन्दचरणकमलेभ्यो नमः॥ तृतीयक्रमसन्दर्भे सन्दर्भाणां समाहृतिः। क्रियते यन्निदेशेन स मेऽनन्यगतेर्गतिः॥१॥

---

### श्रीमद्वल्लभाचार्यकृत सुबोधिनी।

ॐनमोगोपीजनवल्लभाय॥

अधिकारिफलांगं हि श्रवणं सुनिरूपितम्।
स्कंधद्वयेन शेषेषु क्रियते विषयाभिधा॥ १॥
त्रयस्त्रिंशदथाध्याया स्तृतीयेसर्गवर्णने।
स्वाभिप्रेतंसविशेषे हरेर्माहात्म्यसूचके॥ २॥
लोकेसर्गविसर्गौहि यादृशौनेहतौकृतौ।
किंतुलीलयाख्यातौतेनस्कंधद्वयंततम्॥ ३॥
भूतमात्रेन्द्रियधियां जन्मसर्गउदाहृतः।
ब्रह्मणोगुणवैषम्यादितिसर्गस्यलक्षणम्॥ ४॥
अत्रार्थैस्त्रिविधोऽप्यस्ति विवक्षितइतिस्फुटः।
अतोजायतेसर्गो ब्रह्मार्थंक्रियतेऽपरः॥ ५॥
अतोऽत्राष्टविधःसर्गः श्रुतिसांख्यानुसारतः।
भूतमात्रेन्द्रियधियः प्रथमेत्रिविधामताः॥ ६॥
अधिकारेहरेःकार्ये सत्वादिगुणभेदतः।
अतश्चतुर्णामुत्पत्तौद्वादशाध्यायवर्णनम्॥ ७॥
ततोऽत्रयुक्तरूपस्य ब्रह्मणोविनिरूपणम्।
गुणवैषम्यकथने षडध्यायीनिरूप्यते॥ ८॥
कर्मादिमार्गावेदोक्ताःफलतस्तेयदिस्थिराः।
सर्गोऽत्रनैवजायेत ततस्तत्वांशउच्यते॥ ९॥
लोभेनाधिस्वभक्तेर्हि धर्मज्ञानेश्वरैःकृताः।
ततोगुणानांवैषम्यं तमःसत्वरजस्त्वतः॥ १०॥
एवमेकोनविंशत्या हरिकर्तृकईरितः।
चतुर्दशभिरध्यायै हरयेसर्गउच्यते॥ ११॥
गुणवैषम्यमेकेन भगवद्योगसिद्धये।
भूतमात्रेन्द्रियधियां जन्मभोगायदेहतः॥ १२॥
चतुर्भिरुच्यतेऽध्यायैर्नवभिश्चगुणात्रयः।
यादृशैर्भगवद्योगस्तेषांसर्गोनिरूप्यते॥ १३॥
कथायांत्वधिकारोऽत्र चतुर्भिःकरणैःपरे।
सर्गस्यसविभूतेश्चसर्वत्रै वानुवर्णनम्॥ १४॥
उत्तमेत्वधिकारेहि लीलामात्रफलायवै।
किंपुनर्दशधालीलेत्येवंवैदुरिकीकथा॥ १५॥
तत्राधिकारेप्रथमेदेहवैशिष्ट्यलक्षणम्।
भूतानांसंस्कृतानांहित्रेधासर्गोनिरूप्यते॥ १६॥
तीर्थसंगगुणस्मृत्यापंचधावानिरूप्यते।
तीर्थद्वयेनहरिणाभक्तैस्तत्कथयापिच॥ १७॥
अस्मिन्भागवतेशास्त्रेपूर्वदेहस्यनाशनम्।
नापेक्षतेयतः सर्वेभक्तिमार्गाधिकारिणः॥ १८॥

#### अथ व्याख्या।

एवंपूर्वाध्यायांतेतद्वोऽभिधास्येशृणुतेत्युक्तंशुकोऽपिसर्गेविदुरकथैवयुक्तोतितत्कथाक्षेपणार्थंविदुरेणैवंप्रश्नःकृतइत्याह श्लोकद्वयेनएवमेतत्पुरापृष्टइति यथात्वयाबहवः प्रश्नाः कृताः पूर्वपक्षपुरःसरमेत-त्सर्वमग्रेवक्ष्यमाणमेवविदुरेणपृष्टोमैत्रेय आहेतिनोच्यते नहिसर्वेप-दार्थाःपृष्टावक्तव्याः यदेवतस्योपकारिभवतितदेववक्तव्यमितिभावः क्रियर्तीभगवत्कथांश्रुत्वा तस्यांहृदयंगतायां तदर्थार्थं विशेषंपृच्छति सर्वोऽपीति कार्यसिद्धिः श्रोतुर्निरूप्यते अन्यथाव्युत्थितस्यशंकयान वक्तव्यंस्यात् भगवत्त्वमत्र शास्त्रेद्विविधंनित्यंकार्यंच तद्भगवतिनित्यं तत्प्रसादविषयेषुकार्यंतस्याधिकारार्थमुपदेशादिषु गुरुसंज्ञातत्वादिसिद्ध्यर्थमिहोच्यते अतोमैत्रेयस्यापिप्रमेयसंचारण सामर्थ्यार्थंसर्वसंदेहवारणसामर्थ्यार्थं च भगवत्त्वंनिरूप्यते मित्रायाः पुत्रइतिजन्मतएवतस्य सर्वोपकारित्वंसूचितं अग्रेभगवच्छब्दोक्षनतथादूषणं किलेतिप्रसिद्धिरुभयत्रभगवत्त्वेप्रश्नेच अन्यथास्वस्यतदन्वयाप्रवेशाभावात्कथनमयुक्तंस्यात्क्षत्तानामातःपुराध्यक्षःसर्वथाजितेन्द्रियस्तादृशाभावेनपुंसकोऽपिक्रियते अतोविदुरस्याजितेन्द्रियत्वंवक्तुंक्षत्तृत्वमाह क्षत्रेति वनंप्रविष्टेनेति तादृशस्य सर्वपरित्यागपूर्वकवनास्थितिःप्रश्नाधिकारो निरूपितः वनस्थत्वाप्सितत्वात् कर्मत्वं प्रकर्षस्तत्रैव देहत्यागविवक्षया त्याज्यस्योत्कृष्टत्वमधिकार सूचकमिति तदाह स्वगृहमृद्धिमदिति अनन्याधीनत्वं सर्वसम्पत्तिश्चोद्वेगाभावाय चित्तोद्वेगेन यत्क्रियते कर्त्तव्यत्वसहितेनापि न तत्फलायेति॥ १॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी।

प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवं लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये॥ गोपरामाजनप्राणप्रेयसेति प्रभूष्णवे। तदीयप्रियदास्याय मां यदीयमहं ददे॥ त्र्यधिकत्रिंशताध्याय्या तृतीये सर्ग उच्यते। तत्वैः समष्टिसृष्टि यः प्रधानात् पुरुषेक्षितात् प्रदर्श्य भगवद्ब्रह्मनारदाद्यैः प्रवर्त्तितम्॥ श्रीमद्भागवतं शेषकुमाराद्यैश्च दर्श्यते। विदुरोद्धव संवादश्चतुर्भिः पुनरष्टभिः॥ सविसर्गः सर्गविधिः सप्तभिः क्रोडकीर्त्तनं। ततो विसर्गसंक्षेप एकेन कपिलोदयः चतुर्भिर्नवभिश्चेति तृतीयस्कन्धसंग्रहः॥ तत्रतु प्रथमाध्याये क्षत्ता पूर्वं हित्वाग्रजं गतः। तीर्थं तत्र श्रुतानिष्टोऽपृच्छन्मिलितमुद्धवं॥ पूर्वस्कन्धेऽष्टमेऽध्याये राज्ञा कृतेषु बहुषु प्रश्नेषु द्वित्रिप्रश्नानामुत्तरं दत्वा महामुनिर्मनसि परामम्शे। यथाऽनेन राज्ञा संप्रत्यहं पृष्टस्तथैव पूर्वं विदुरेणापि मैत्रेयः पृष्ट इति। ततश्च तत् प्रस्तावेनैवोत्थापितेन राज्ञः सर्वप्रश्नोत्तरं दास्यामीति निश्चित्याह एवमिति ऋद्धिमत् सर्वसम्पद्भिः पूर्णम्॥ १॥

---

यद्वा अयं मन्त्रकृद्वो भगवानखिलेश्वरः ।
पौरवेन्द्रगृहं हित्वा प्रविवेशात्मसात्कृतम् ॥ २ ॥

श्रीराजोवाच ॥

कुत्र क्षत्तुर्भगवता मैत्रेयेणास सङ्गमः ।
कदा वा सह सम्वाद एतद्वर्णय नः प्रभो ॥ ३ ॥
नह्यल्पार्थोदयस्तस्य विदुरस्यामलात्मनः ।
तस्मिन् वरीयसि प्रश्नः साधुवादोपबृंहितः ॥ ४ ॥

श्रीसूत उवाच ।

स एवमृषिवर्योऽयं पृष्टो राज्ञा परीक्षिता ।
प्रत्याह तं सुबहुवित् प्रीतात्मा श्रूयतामिति ॥ ५ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

श्रीमतमङ्गलमूर्तये भगवान्निम्बार्कायनमः ॥

श्रीनिम्बार्कंनमस्कृत्यप्रदीपोऽयंविरच्यते अधिकार्थशदध्यायसंयुक्तेतुतृतीयके सर्गादयस्तुसंत्येवह्येकत्रापिह्यनेकशः प्राधान्यतस्तुवर्ण्यंतेतृतीयादिषुतेक्रमात् ॥ अतिक्रांतस्कंधांते परिमाणंचकालस्य-कल्पलक्षणविग्रहम् यथापुरस्ताद्व्याख्यास्ये पाद्मंकल्पमथोऽशृणिव तिप्रतिज्ञातमर्थंविस्तरतोवर्णयितुमितिहासंप्रस्तौतिश्रीशुकःएवमिति द्वयेन मैत्रेयः मित्रायाः पुत्रःक्षत्राभुजिष्यापुत्रेण विदुरेण क्षत्ताशूद्रात्क्षत्रियाजेप्रतीहारेचसारथौभुजिष्यातनयेक्षत्तानियुक्तेचप्रजासु जीतिविश्वः ऋद्धयः संपदोविद्यंतेयस्मिन्तत् ॥ १ ॥

भाषाटीका ।

श्रीशुक उवाच—इसीप्रकार पहिले अपना समृद्धियुक्त घरको छोड़कर वनमें प्रविष्टविदुरजीने भगवान् मैत्रेयजीसेपूछा ॥ १ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

किञ्चातिश्लाघ्यं त्यागानर्हमित्याह यद्वै प्रसिद्धं गृहं वः पाण्डवानां मन्त्रकृत् दौत्यकर्त्ता सन् अयं श्रीकृष्णः बुद्धिसन्निधानादय मिति निर्देशः । पौरवेन्द्रो दुर्योधनस्तस्य गृहं हित्वा अनाहूत एव प्रविवेश तत्र हेतुः । आत्मसात् कृतं आत्मीयत्वेन गृहीतम्॥ २ ॥

कुत्र क्षत्तुर्मैत्रेयेण संगम आस बभूव ॥ ३ ॥

वरीयसि श्रेष्ठे अल्पस्यार्थस्योदयो यस्मात्तथाभूतो न भवति साधुवादेन सतामनुमोदनेन उपबृंहितः सम्वर्द्धितः । यद्वा साधो मैत्रेयस्य वादेनोत्तरेण श्लाघित इत्यर्थः ॥ ४ ॥

श्रीराधारमणदासगोस्वामिविरचित दीपिन्याख्यतट्टिप्पणी ॥

तत्र अनाहूतस्यापि विदुरगृहप्रवेशे हेतुः आत्मसात्कृतं स्व गृहे नाह्वानापेक्षेत्यर्थः ॥ २ ॥

कुत्र सङ्गमआसकुत्रकस्मिन् विषये संवादः कदा वा आस बभूवएतत्त्रयम् ॥ ३ ॥

सत्कर्तृकानुमोदनस्यसंवादकालेऽश्रुतत्वाद्यद्वेति उपबृंहणस्य श्लाघाकार्यत्वाद्वित्यर्थ इत्युक्तम् ॥ ४ ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ॥

अथ लब्धप्रश्नावसरोराजापृच्छतिद्वयेन कुत्रेति कुत्रप्रदेशेमैत्रेयेणसहभगवतो क्षत्तुर्विदुरस्यसंगमःसंगतिरासबभूव कदाकस्मिन्कालेवातेनसहसंवादोऽभूदेतत् हेप्रभोशुकनोऽस्मभ्यंवर्णय ॥ ३ ॥

स्वस्य शुश्रूषाप्राप्तिः करोति नहीति महात्मनः भगवत्प्रवणमितस्यविदुरस्यसर्वाधिवरीयसिमैत्रेयवरतत्वज्ञत्वाद्विगुणोत्कृष्टेमैत्रेये प्रश्नः अल्पार्थोदय अल्पस्यार्थस्योदयोयस्मात्स अल्पप्रयोजनोल्पः नहिभवति कथंभूतः प्रश्नः साधुवादोपबृंहितः साधूनांसर्वोत्कृष्टचरित्ररूपेणवादेनउपबृंहितःविस्तृतः अतस्तदवश्यंमयाश्रोतव्यमितिभावः ॥ ४ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

विदुरमैत्रेयसंवादंघटयितुंतीर्थयात्राकालापदेशेनप्रश्नबीजमुत्थापयति यदात्विति वःपितामहानामर्थंमंत्रकृत् सन्धिकृत् सान्धिकार्येऽनुत्पन्नेपौरवेन्द्रपुरंहास्तिनापुरंत्यक्त्वा आत्मसात्कृतमुपप्लाव्याख्यपुरंयदाप्रविवेशतदाविदुरस्तीर्थयात्रार्थंगतइतिशेषइत्यन्वयः अत्रतुशब्देन युद्धकालेतुविदुरस्तीर्थयात्रांगतोऽपिसन्प्रायश्चास्तेराजपुरेपांडवानांहितेच्छयेतिवाक्यविशिष्टमनेनविदुरेणतीर्थसेवाकदाचित्कृतानयुद्धकालमारभ्यतत्समाप्तिपर्यंतमित्युक्तंभवति ॥ २ ॥

तीर्थनिषेवणाविदुरस्यसामान्यतोज्ञातमैत्रेयसंगकालस्तेनापिराजादेशविशेषबुभुत्सयापृच्छति कुत्रेति कुत्रकस्मिंस्तीर्थविशेषे पुराणश्रवणहेतुरपिवक्तव्यइत्यतोवर्णयेत्युक्तम् ॥ ३ ॥

विविदिषालौल्यकारणमाह नहीति हिशब्दोहेत्वर्थः यस्मादल्पार्थोदयोनतस्माद्वर्णयेत्यर्थः अत्रापिहेतुमाह साध्विति साधुश्लिषुचितेसोऽस्येसज्जनैवाक्रुंष्टपुमानितियादवः ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

यद्वेत्यत्र यद्वाअयमिति चित्सुखः ॥ २ ॥

तत्र शौनकवद्राजापि तत् कथाया उत्कण्ठया तां विशेषतः पृच्छति कुत्रेति । कुत्र कदा संगम आस आसीत् संवादो वा तत्र कुत्रेति कस्मिन् स्थाने विषये वेति गम्यम् । एतदिति तदेतत्त्रयमित्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

श्रीशुक उवाच ।

यदा तु राजा स्वसुतानसाधून् पुष्णन्नधर्मेण विनष्टदृष्टिः ।
भ्रातुर्यविष्ठस्य सुतान् विबन्धून् प्रवेश्य लाक्षा भवने ददाह ॥ ५ ॥
यदा सभायां कुरुदेवदेव्याः केशाभिमर्षं सुतकर्म गर्ह्यम् ।
न वारयामास नृपः स्नुषायाः स्वास्रैर्हरन्त्याः कुचकुङ्कुमानि ॥ ६ ॥
द्यूते त्वधर्मेण जितस्य साधोः सत्यावलम्बस्य वनं गतस्य ।
न याचतोऽदात् समयेन दायं तमोजुषाणो यदजातशत्रोः ॥ ७ ॥
यदा च पार्थप्रहितः सभायां जगद्गुरुर्यानि जगाद कृष्णः ।
न तानि पुंसाममृतायनानि राजोरु मेने क्षतपुण्यलेशः ॥ ८ ॥

श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी ।

ननुक्षानमार्गेएवपरित्यागोपयोगोगृहस्यतद्विरोधित्वात्भक्तिमार्गे गृहस्योत्कृष्टत्वकथनादुद्वेगादेवतस्यगमनमाशंक्यनिवारयति यद्वा अयमिति यद्गृहभगवताआत्मसात्कृतं भगवान्विदुरगृहंस्वगृहंलोकप्रतीत्यामन्यते नकेवलमभिमतिमात्रंकिंतुव्यवहारोपितत्रभगवदीयएवेत्याहप्रविवेशेतिहेत्वंतराणिनिवारयतिपौरवेंद्रगृहंहित्वेतिदुःशासनगृहंभगवत्स्थित्यर्थमिद्रगृहादप्युत्तमं तैः प्रार्थ्यमानमपिहित्वाउचितंदुःशासनगृहेगंतुमंत्रार्थमागतस्य तत्रापिभक्तानांकार्यसाधकस्यतत्रापिभगवतः सर्वोत्कृष्टपूर्णगुणवतउत्कृष्टएव स्थानेस्थातुमुचितं किंचअभक्तत्वदैत्यत्वादिधर्मानशंकनीयाः यतोऽयमखिलेश्वरः सर्वस्यापिस्वामीसर्वनियंताअतोयथाभगवद्गृहेदेवालयादौ स्थितिरुचितातथातस्यस्वगृहेपितथाऽपिगृहमितित्यक्तव्यमेव गृहस्थितेरुत्कृष्टत्वंनभगवदीयत्वमात्रेण किंतुभगवत्स्थित्याभगवत्कार्यार्थंवा ॥ अन्यथानवस्तव्यमितिस्थितिः प्रश्नेकृतेतूत्तरंदेयम् ॥ २ ॥

नत्वस्थवचनंतत्रवक्तव्यमित्याशंक्यतत्रस्थौदेशकालावुत्कृष्टौभविष्यत इतिकतितौपृच्छतिकुत्रत्तु रितिअनुवादेपूर्वोक्तपदानांकीर्त्तनंतदुक्तार्थपरिज्ञानबोधकं प्रश्नेहिसंगमोपेक्ष्यते महतांसंगमनिमित्तोदेशउत्कृष्टएवभवतीति आसंगमइति समागमइतिपाठेऽप्यस्तीत्यादिप्रयोगः सिद्धएव कदावेतिकालस्यानादरणीयत्वं सहसंवाद इति साक्षाद्राज्ञावहुपृष्टमितिप्रश्नक्रमेणोत्तरं वक्तव्यमित्याशंक्यनिवारयति॥ एतद्वर्णयेति नह्यत्यस्मज्ञयमुपकारित्वात्प्रभोइतिसामर्थ्यं पूर्वोक्तस्या त्रैवसंक्रामयितुमनेनैववातत्संदेहानिवारणंकर्त्तुंसूचितम् ॥ ३ ॥

पूर्वापेक्षयापिमुख्यतयैतच्छ्रवणेहेतुमाह नह्यल्पार्थोदयइति खंडशः पदार्थश्रवणं खंडमेवफलं जनयति इदं तु खंडमप्यखंडमेव फलं जनयिष्यति संबंधिवैशिष्ट्यात् देशकालपात्रविशेषेजलादिदानवत्तदाह अल्पस्यार्थस्योदयो यत्रतादृशः संप्रश्नो नभवतीति इत्यनेन तादृशस्यवैयर्थ्यापत्तिरिति युक्तिरुक्ता संबंधिनो वैशिष्ट्यमाह विदुरस्यामलत्वम् इति परमेतीतिहस्य निर्मलांतःकरणस्येत्यर्थः वयंत्वनीतिज्ञाः शापादिनाचन शुद्धांतःकरणाअतोवस्तुकिंचित्पृच्छाम इति भावः ततोपितद्गुरुत्कृष्ट इत्याह वरीयसीति साधुवादोपबृंहित इति अंतरुत्साहे हेतुरुक्तः फलावश्यंभावाय अतएव तेनोपबृंहितः अधिकः पुष्टः कृत इति ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

किञ्च तस्य तद्गृहं तज्जिगमिषत्येभ्यस्तीर्थेभ्यः सर्वेभ्योऽप्यतिश्रेष्ठं त्यागानर्हं । तदपि भ्रातृदत्तेन सन्तापेनैव तत्याजेत्याह यदिति वै निश्चितं यद्गृहं वः पाण्डवानां मन्त्रकृत् दूत्यकर्ता सन् अयं श्रीकृष्णः बुद्धिसन्निधानादयमितिनिर्देशः । पौरवेन्द्र स्तदा दुर्योधनः अनाहुत एव प्रविवेश तत्र हेतुः आत्मसात्कृतमात्मीयत्वेन स्वीकृतम् ॥ २ ॥

आस वभूव ॥ ३ ॥

वरीयसि श्रेष्ठे । अल्पस्यार्थस्योदयो यस्मात् तथाभूतो न भवति साधुवादेन सतामनुमोदनेन उपबृंहितः सम्वर्द्धितः । यद्वा साधोर्मैत्रेयस्य वादेनोत्तरेण श्लाघित इत्यर्थः ॥ ४ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

नकेवलमृद्धिमदपितुतीर्थरूपमित्याह यदिति वैप्रसिद्धंयत् अयं श्रीकृष्णः अखिलेश्वरः सर्वेश्वरोऽपिवोयुष्माकंपांडवानांमंत्रकृत् दौत्यकर्तापंचग्रामयाचनार्थंहास्तिनापुरंगतः पौरवेंद्रस्यदुर्योधनस्यगृहंहित्वावैप्रसिद्धंयद्विदुरगृहम् आत्मसात्कृतमात्मीयत्वेनगृहीतं अनाहूतएवप्राविवेशएतदुद्योगपर्वणिद्रष्टव्यम् ॥ २ ॥

आसवभूव ॥ ३ ॥

वरीयसिश्रेष्ठे अल्पार्थोदयः अल्पफलोन ॥ ४ ॥ ५ ॥

भाषा टीका ।

जिस घरको ये तुह्मारे मंत्र करने वाले अखिलेश्वर भगवान् दुर्योधन के घरको छोडकर अपना समझ कर प्रविष्ट हुये ॥ २ ॥

भगवान् विदुर का और मैत्रेयसे संवाद कहां पर हुआ और किस काल में हुआ हे प्रभो यह कहिये ॥ ३ ॥

तौन विदुर महात्मा की मैत्रेय से प्रश्न करनेमें अल्पार्थका उदय नहीं किंतु वहु अर्थका उदय होगा वह प्रश्नभी साधुवाद से उपबृंहित होगा ॥ ४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

त्यागानर्हस्यापि गृहस्य त्यागे हेतुत्वेन कौरवापराधानाह यदेत्यादि दशभिः एतेषाञ्च तदा क्षत्ता अयादित्येकादशे क्रिया सम्बंधः यविष्ठस्य कनिष्ठस्य पाण्डोः विबन्धून् पितृहीनान् ॥ ५ ॥

### श्रीधरस्वामिकृत भावार्थदीपिका ।

कुरुदेवस्य युधिष्ठिरस्य देव्या द्रौपद्या आत्मनः स्नुषायाः स्वीयैरस्रैरश्रुभिः स्वकुच कुङ्कुमानि रिपुस्त्रीणां वा तत् भर्तृवधेन हरन्त्याः ॥ ६ ॥

सत्यावलम्बस्य सत्याश्रयस्य । वनात् प्रत्यागत्य समयेन पूर्वकृतेन दायं भागं याचमानस्य यत् यदा न अदात् तमः मोहं जुषमाणः ॥ ७ ॥

यानिच वचनानि पुंसां भीष्मादीनां अमृतायनानि अमृतस्रावीणि । राजा धृतराष्ट्रः दुर्योधनो वा उरु बहु न मेने । यतो नष्टः पुण्यलेशो यस्य सः न सुखकीर्त्तिधर्म्मादि हेतुः किन्तु राज्यप्राप्तिमात्रहेतुः पुण्यलेश एवासीत् । तस्यापि नष्टत्वात् न आदृतवानित्यर्थः ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामि विरचित दीपिन्याख्य टिप्पणी ।

एतेषांचयदेत्यादिदशपद्यानां तदा तादृशाऽपराधदर्शनकाले ६ तन्नर्तृवधेनेतिरिपुस्त्री भर्तृबधेन अत्रद्रौपद्यश्रुस्रावस्यकारणात्वरिपुस्त्रीकुंकुमहरणस्यकार्य्यत्वमिति चतुर्थ्यांतिप्रयोक्तिरुत्प्रेक्षाचत्य श्रिता तथा चतल्लक्षणं अतुर्थस्य कारणस्य गदितु शीघ्रकारितां यदेति कार्य्यस्यपूर्वोक्तिरिति ॥ ७ ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ।

एवं सपृष्टोराज्ञामुनिराहेति सूतआहसइति राज्ञापरीक्षितापृष्टः साकल्येनपृष्टः सुबहुवित्सुष्ठुबहुवेत्तीतिसुबहुवित्मुनिः श्रीशुकः प्रीतात्मासमीचीनप्रश्नेनसंतुष्टचित्तः श्रूयतां इत्यामंत्र्यराजानं प्रत्याह ॥ ५ ॥

एवंराज्ञापृष्टोमुनिस्तमेवसंवादंप्रतुष्टूषुस्तावद्विदुरस्यपौरवेंद्रगृहत्यागेनिमित्तान्याह यदेति यदाराजाधृतराष्ट्रोयविष्ठस्य कनीयसोभ्रातुः पांडोःसुतान्विबंधून्पितृहीनान्युधिष्ठिरादीन् लाक्षाभवनेजतुगृहेप्रवेश्य प्रविष्टान्कृत्वादहाहदग्धवान् तदासविदुरःअपासरद्गतइत्येकादशैकियासंबंधः एवमुभयत्रापि कथंभूतोराजाविनष्टदृष्टिः विनष्टाहष्टिर्ज्ञानविषयकज्ञानं चक्षुश्चयस्यसः अतएवाधर्मेणासाधून्वालान्स्वसुतान्पुष्णन् एवंभूतोददाहेत्यन्वयः ॥ ६ ॥

यदाचनृपः धृतराष्ट्रः सभायांकुरुदेवस्ययुधिष्ठिरस्यदेव्याद्रौपद्याःकेशाभिमर्शरूपंगर्ह्यमनिंदितं सुतकर्मपुत्रकर्तृकंकर्मनवारयामासतदायादित्यन्वयः कथंभूतायाः कुरुदेव्याः आत्मनः स्नुषायाःस्वास्त्रैः स्वीयैरश्रुभिः कुचकुंकुमानिस्वस्तनगतकुंकुमानिहरंत्याः अपहरंत्याः ॥ ७ ॥

यतद्यातितमोजुषाणोऽजातशत्रोःतमःप्रधानोराजायदासमयेनप्रतिज्ञानुसारेणदायरिक्थंयाचतोनादाप्रददौतदायादित्यर्थः कथंभूतस्याजातशत्रोःवनागतस्यवनात्प्रत्यागतस्य सत्यावलंबस्यसत्यंधर्मएवावलंबआश्रयोयस्य तस्यसाधोः साधुलक्षणलक्षितस्यद्यूतेऽज्ञानिभिरधर्मेणाधर्मरूपेण दुर्योधनेनवाजितस्यपराजितस्य ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

सूतःशौनकप्रश्नपरिहारायतत्संवादंकथयति सएवमिति बहुपूर्णतायामिति धातोर्देवादिसज्जनानिवेवितपूर्णंभगवंतंवेत्तीतिसुबहुविदिति तज्ज्ञानफलमाह प्रीतात्मेति प्रियोहिज्ञानिनोऽत्यर्थमितिस्मृतेः प्रसन्नमनावाश्रूयतामित्यनेनवक्तव्यार्थेआदरंजनयति उच्यमानंसहे-

तुकंचेच्छ्रद्धांजनयति अस्यकथंतदित्यतउक्तमितीति इतिहेतुप्रकारप्रकारादिष्विति यादवः ॥ ५ ॥

विदुरस्यतीर्थयात्रायांनिमित्तमाह यदात्विति अत्रयदाशब्दो हेत्वर्थे यदातदेतिहेत्वर्थेकालार्थेऽपिचभवत्यतइतिवचनात् अधर्मेणेत्यस्यावधारणार्थेतुशब्दःविनष्टाभगवद्विषयादृष्टिर्यस्यसतथा असाधून्न्यायवर्तिनः अधर्मेणाधर्मविरुद्धकर्मणायविष्ठस्य कनिष्ठस्य विबंधून्लौकिकबंधुरहितान् लाक्षाभवनेलाचोपगूढगृहेददाह यदायस्मात्तदातस्मादित्येकोहेतुः ॥ ६ ॥

अथमेकोहेतुरित्याह यदेतिनृपोधृतराष्ट्रः कुचकुकुंमान्यस्रैर्नेत्रजलैर्हरंत्याः स्वस्याःस्नुषायाः कुरुदेवस्ययुधिष्ठिरस्यदेव्याःपट्टाभिषिक्तायाः द्रौपद्याःसभायांगर्ह्यैर्निंद्यं सुतस्यदुःशासनस्य कर्मकेशाभिमर्शकबरीभारपरामर्शलक्षणं न निवारयामास यदायस्मात्तस्मात् ॥ ७ ॥

अयंतृतीयोहेतुरित्याह द्यूतेत्विति तुशब्दोऽवधारणार्थः अधर्मेणेत्यनेनसंबध्यते साधुत्वादीनिपितृधनदानयोग्यत्वहेतवइतिप्रकाशनायोक्तानीति अवलंबआधारयष्टिः दायंस्वस्वप्राप्तियोग्यंपितृधनं वनवासावसानसमयेनादादितियस्मादितिशेषः तत्रहेतुः तमइति तमोयथार्थज्ञानग्लानिकारणंपुत्रवचनंजुषाणः सेवमानोऽंगीकुर्वाण इत्यर्थः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

यदेति । अमृतायनानीत्यत्र अमृताज्ञानीति सूतेत्यत्र इतीति चित्सुखः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

---

### श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ।

अत्र देशकाल परित्याग हेतवस्त्रयः पृष्टाः तत्र प्राप्यमेकत्वात्परित्यागहेतुर्वक्तव्यः सचसाक्षाद्भगवत्कथारूपो न भवतीति शुकेनावर्णनीयत्वमाशंक्य तादृशवर्णनायां हेतुमाह सूतः ऋषयो हि मंत्रद्रष्टारोयेनमंत्रेण भगवदंगानां मध्यउत्कृष्टेनशीघ्रमस्य हृदयं शुद्धं भविष्यतीति तदुपकारार्थं शुकप्रवृत्तिं बोधयति बयोपदेशेन स्वहानिर्निवारिता अयमिति पुरस्थितत्वेनतस्य भगवत्त्वंफलं जातमिति परोपकारनिरतत्वं सूचितं राज्ञेति लोकेतत्प्रश्नोत्तरमावश्यकं परीक्षितेतितस्यवीतसंस्कारः सूचितःअतइदंतद्रूपकारीति प्रत्याह सर्वतत्वपरिज्ञानार्थं सबहुविदिति मुख्यमस्य भगवत्कृत्यत्वेनोपस्थितत्वात्प्रीतात्मा अत्रापिशंकांप्रत्याह सर्वतत्व परिज्ञानार्थांतरं नवक्तव्यामिति श्रूयतामित्याह ॥ ५ ॥

अस्य परित्यागो भगवन्निमित्तंभगवतैवकृतमिति निरूपयितुं भगवत्पक्षपातिनो भगवद्विमुखैः सहस्थितिरनुचितेतिवक्तुं कौरवाणांभगवद्विमुखत्वमाह चतुर्भिः यदात्विति विदुरस्य गृहत्यागे दशभिर्हेतुरुच्यते चतुर्भिरपराधोक्तिरेकेन हिसमागमः त्रिभिर्मंत्रोक्तिरपरेनिषेधकनिवारणे धर्मशास्त्रविरुद्धं लोकशास्त्रविरुद्धं नीतिविरुद्ध मीश्वर वचनोल्लंघनमित्यपराधाः यद्यपि । धृतराष्ट्रेणैवनं कृताः तथाप्यप्रतिषिद्धमनुमतं भवतीति सहायात्पराधित्वंभवति प्रयोजकत्वात्सएवकथ्यते । नैमित्तिकत्वात्तानिमित्तपरित्यागकथनं दोषायअत्रमुख्यापराधो भगवद्वाक्योल्लंघनम् तत्स्वभावतो जीवस्य नघटतइति दोषत्रयसन्निपातस्तद्धेतुत्वेन वक्तव्यः नहिसन्निपाताभावे कश्चिद्भगवद्वाक्यं नमन्यते तत्रप्रथमं वातत्सदोषमाह यदात्विति राजन्यदीर्घदर्शित्वंतुशब्दो विदुरस्य पूर्वस्नेहव्यावृत्तिसूचकः स्वसुतानिति औरसत्वादत्यामः असाधुसंवर्द्धनं दोषायेति तदध

यदोपहूतो भवनं प्रविष्टो मन्त्राय पृष्टः किल पूर्व्वजेन ।
अथाह तन्मन्त्रदृशां वरीयान् यन्मन्त्रिणो वैदुरिकं वदन्ति ॥ ९ ॥
अजातशत्रोः प्रतियच्छ दायं तितिक्षतो दुर्व्विषहं तवागः ।
सहानुजो यत्र वृकोदराहिः श्वसन् रुषा यत्त्वमलं बिभेषि ॥ १० ॥
पार्थांस्तु देवो भगवान् मुकुन्दो गृहीतवान् सक्षितिदेवदेवः ।
आस्ते स्वपुर्य्यां यदुदेवदेवो विनिर्जिताशेषनृदेवदेवः ॥ ११ ॥
स एष दोषः पुरुषद्विडास्ते गृहान् प्रविष्टो यमपत्यमत्या ।

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

मैणासुतरामन्तर्दृष्टिरपिगता तदाहांवेनष्टदृष्टिरिति भ्रातुर्यविष्ठस्येति संबंधकृतधर्मोनास्तीति सूचितं विबंधूनिति सर्वथा दयाभावः कनिष्ठभ्रातुः पांडोः पुत्रान्पांडवान्राज्यस्पर्द्धादि शंकारहितान्स्वव शान्यितृहीनान्सर्वथा परिपालनीयान् लाक्षाभवने प्रवेश्यविश्वास घातकं कृत्वाददाहेत्यर्थः अनेनास्य क्रिया संपूर्णेति पाण्डवानाम मरणेऽपिवधदोषोजातएवेति भावः ॥ ६ ॥

राजसंदोषमाह यदासभायामिति भगवतासंरक्षितानां तेषां राजसूयेन राजत्वयुक्तानां राज्याकांक्षां परित्यज्य तूष्णींस्थितानां बलादपराधकरणं सर्वनाशकं युधिष्ठिरस्य कुरुदेवत्वात् राजपत्नी केशाकर्षणं सर्वनाशायेति जानन्नपिनवारयामास सभायामिति परलोकनाशोऽपिसूचितः सभायांन प्रवेष्टव्यमिति स्मृतेः अवमर्श आकर्षणं उत्पादकस्य परिपालनमावश्यकमिति सुतपदं परलोकसाधकत्वाभावान्न पुत्रपदं कर्मेति दुरदृष्टजनकं गर्ह्यमिति लोकेपि निन्दाजनकं बाष्पाणः समदकशांतो दीनानां समुपेक्षकः स्रवते अक्षतस्यापि भिन्नभांडात्पयो यथेति संबंधरहितानां बाष्पाणानगण्येतदुवितं तदपि नकृतवानित्याह नवारयामासीति अनेनक्षत्रत्वं तस्यगतमिति सूचितं नृपइति सामर्थ्यंस्नुषा यां इत्यनेन विरोधः अस्तैः कुचकुंकुमानिहरंत्याइति दयाहेतुत्वम मंगलत्वं च सूचितं स्वशब्देनास्त्राणामलौकिकसामर्थ्यं सूचितं कुंचकुंकुमानीत्युपरिवस्त्राभावः कुंकुमानामपि गमनेऽतिलज्जाइतर रागाभावार्थं तथाकरणं एवं प्रत्यक्षतोऽतिक्रौर्यंनिरूपितम् ॥ ७ ॥

सात्विकं दोषमाहद्यूतेविंतितुशब्देनास्मिन्कृते पूर्वकृता अपराधा अकृता भवंतीति सूचितं पूर्वं तेषां राज्यापहरणं केवलम धर्मेणैवतदपि सहित्वामहद्दुःखमनुभूयस्वकीयंदायं शास्त्रतो लोकत आविरुद्धं समयेन मर्यादया याचतो याचमानाय वा पदव्यत्ययश्छंदसः अदानेहेतुस्तमोजुषाणइति मोहंजुषाणः अजातशत्रोरिति विपरीतशंकाभावः स्वकृतनियमोल्लंघनान्मोहः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

यदेत्यादीनां, तदा स क्षत्ता अयादित्येकादशस्थया क्रियया सम्बन्धः विनष्टे दृष्टी नेत्रे दृष्टिर्ज्ञानञ्च यस्य यविष्ठस्य कनिष्ठस्य पाण्डोः विबन्धून् पितृहीनान् ॥ ५ ॥

कुरुदेवदेव्या द्रौपद्याः कुचकुंकुमानि स्वस्य रिपुस्त्रीणाम्वा तद्धर्त्तृवधेन हरन्त्या इति चतुर्थ्यतिशयोक्तिरुत्प्रेक्षाच व्यञ्जिता ॥ ६

वनात् प्रत्यागतस्य समयेन पूर्वकृतेन दायं भागं याचमानस्य ध्रुव यदा ॥ ७ ॥

श्रीमद्विश्वनाचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

पुंसां तद्भक्तानां भीष्मादीनां राजा धृतराष्ट्रो दुर्योधनो वा उरु बहु न मेने तत्र हेतुः क्षत्तेति न सुखकीर्त्तिधर्मादिकरः किन्तु राज्य प्रापको यः पुण्यलेश आसीत्तस्यापि नष्टत्वादित्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

तादृशमपिगृहंदुर्जनकृतोपद्रवात्त्यक्तवानित्याह यदेत्येकादशभिः विनष्टादृष्टिर्यस्यसराजाधृतराष्ट्रः असाधून्दुष्टान् दुर्योधनादीन् अधर्मेणपुष्णान् यविष्ठस्यकनीयसोभ्रातुःपांडोःसुतान्युधिष्ठिरादीन् विबंधून् मृतपितृकान्लाक्षाभवनेप्रवेश्ययदाददाहतदाक्षविदुरः अयादित्येकादशेक्रियासंबंधः लाक्षाभवनदाहे मनसाअयात्दुर्योधना सत्कारैतुसंवयमितिविवेकः एवमग्रेऽपि ॥ ६ ॥

नृपः धृतराष्ट्रः आत्मनः स्नुषायाः कुरुदेवस्य युधिष्ठिरस्यदेव्या द्रौपद्याः केशाभिमर्शरूपंगर्ह्यंनिंद्यं सुतस्यदुःशासनस्य कर्मनवारयामासतदाअयात् ॥ ७ ॥

द्यूतेअधर्मेणअन्यायेनजितस्यवनात्प्रत्यागतस्यसाधोःशिष्टस्ययुधिष्ठिरस्यपराजितंद्वादशवर्षाणिवनेएकंवर्षमलक्षितः पुर्य्यषित्वापुनराज्यस्वरिक्थभागभवत्इत्येकंपूर्वकृतेनसमयेनदायं रिक्थंयाचमानस्य तमोजुषाणः तामसंकल्पंदुर्योधनंसेवमानोधृतराष्ट्रः यत्यदानददौ तत्तदाअयात् ॥ ८ ॥

---

भाषाटीका ॥

सूतउवाच—इस तरह राजा परीक्षित् ने जब पूछा तब शुकदेव जी ऋषियों में श्रेष्ठ प्रसन्न होकर राजा से बोले, कि सुनिये ॥ ५ ॥

श्रीशुकउवाच—जब अधर्म से विनष्ट दृष्टि राजा धृतराष्ट्र अपने दुष्ट पुत्रों को पालन करते हुये छोटे भ्राता के पुत्रों को लाक्षा भवन में प्रवेश करा कर दाह कराते हुये ॥ ६ ॥

और जब राजा धृतराष्ट्र कुरुदेव युधिष्ठिर की स्त्री राजा की स्नुषा अपने अश्रुवों। से स्तनों का कुंकुम हरण करती हुई द्रौपदी के केश खींचना इत्यादि पुत्रों के दुष्ट कर्मों को न रोका॥७॥

और जब द्यूत में अधर्म से जित सत्य संध युधिष्ठिर वन से समय पर आय कर अपना राज्य भागमागते को राज्य भाग नहीं दिया ॥ ८ ॥

पुष्णासि कृष्णाद्विमुखो गतश्रीस्त्यजाश्वऽशैवं कुलकौशलाय ॥ १२ ॥
इत्यूचिवांस्तत्र सुयोधनेन प्रवृद्धकोपस्फुरिताधरेण।
असत्कृतः सत्स्पृहणीयशीलः क्षत्ता सकर्णानुजसौबलेन ॥ १३ ॥
क एनमत्रोपजुहाव जिह्मं दास्याः सुतं यद्बलिनैव पुष्टः।
तस्मिन् प्रतीपः परकृत्य आस्ते निर्वास्यतामाशु पुराच्छ्वसानः ॥ १४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका।

इदानीं विदुरस्यैव कृतं पराभवं दर्शयति षड्भिः यदा पूर्व्वजेन धृतराष्ट्रेण मन्त्रायोपहूतोऽन्तर्गृहं प्रविश्य मन्त्रं पृष्टः सन् अथानन्तरं तदाह। किं तत् मन्त्रिणो यद्वैदुरिकं विदुरवाक्यमिति प्रसिद्धं वदन्ति ॥ ९ ॥

तदेवाह अजातशत्रोरिति त्रिभिः। तव आगः अपराधं सहमानस्य दायं प्रतियच्छ देहि। यत्रापराधे अनुजैः सह वर्त्तमानो वृकोदर रूपोऽहिः क्रोधेन श्वसन् वर्त्तते। यत्त्वस्मात्त्वं अलमत्यर्थं बिभेषि ॥ १० ॥

मम तादृशा बहवः पुत्राः सन्तीति गर्वं मा कृथा इत्याह। पार्थांस्तु मुकुन्द आत्मीयत्वेन गृहीतवान्। स च देवः। तत्रापि भगवान्नतु प्राकृतः। किंच। सह क्षितिदेवैर्विप्रैर्देवैश्च इन्द्रादिभिर्वर्त्तमानः यत्रासौ कृष्णस्तत्रैव विप्रा देवाश्च इत्यर्थः। स च स्वपुर्यामेव सुखमास्ते नत्वन्यत्र गतः। किञ्च यदुदेवानां देवः पूज्यः। यतोऽसौ कृष्णः तत्रैव यदुप्रवरा इत्यर्थः किञ्च नृदेवेषु मण्डलेश्वरेषु दीव्यन्ति प्रकाशन्ते इति नृदेव देवा राजानः विनिर्जिता अशेषा नृदेवदेवा येन यतोऽसौ तत्रैव सर्वे राजानः अतः पार्थानां दायं देहीति ॥ ११ ॥

दुर्योधनस्तत्र मन्यते इति चेदत आह स एष मूर्तो दोष एव गृहान् प्रविश्य आस्ते। दोषत्वे हेतुः। पुरुष द्विट् श्रीकृष्णद्वेष्टा। कोऽसौ यं त्वमपत्यमत्या पुष्णासि। नत्वपत्यमसौ नपतत्यस्मादिति ह्यपत्यं प्राहुः। गता श्रीर्यस्मात् सत्वमित्याक्रोशति। अत एनं अशैवं अमंगलं आशु त्यज ननु कथं पुत्रस्त्याज्यः। तत्राह कुलस्य कौशलाय। त्यजेदेकं कुलस्यार्थे इति न्यायात् ॥ १२ ॥

इत्यूचिवान् एवमुक्तवान् असौ क्षत्ता विदुरः। सतां स्पृहणीयं शीलं यस्य सः। कर्ण दुःशासन शकुनि सहितेन दुर्योधनेन असत्कृतः तिरस्कृतः ॥ १३ ॥

तिरस्कारमाह क इति। दासीसुतो ह्यत्राह्वानानर्हः। जिह्मः कुटिलः जिह्मतामाह यस्य बलिना अन्नेन पुष्टः तस्मिन्नेव प्रतीपः प्रतिकूलः परेषां कार्ये वर्त्तते अतः पुरान्निर्वास्यतां श्वसानः श्वसन् जीवनमात्रशेष इत्यर्थः श्मशान इति पाठे श्मशानवदमंगलः। सर्व्व धनादि गृहीत्वा निर्वास्यतामित्यर्थः ॥ १४ ॥

श्रीराधारमणदासगोस्वामि विरचित दीपिन्याख्य तट्टिप्पणी।

प्रचुरपुण्यलेशमात्रमेवनष्टंनसर्वमित्यर्थ भ्रान्तिमात्रेणव्याचष्टे नसुखकीर्त्तीत्यादि हेतुगर्भमिदंविशेषणम् ॥ ९ ॥
अनन्तरं प्रश्नानन्तरं तद्वाक्यमाह मंत्रिणोऽद्यापि न्यायोपेतंवाक्यमन्यस्यापिवैदुरवाक्यसदृशमितिवदन्ति ॥ १० ॥ ॥ ११ ॥
तथापि देवेष्वपि सन्तीतिविशेषणस्यप्रयोजनंव्याचष्टे यतोऽसाविति एवमग्रेऽपि ॥ १२ ॥

त्यजेदेकंकुलस्यार्थेग्रामस्यार्थेकुलंत्यजेत्ग्रामंजनपदस्यार्थेआत्मार्थेसकलंत्यजेदितिसमग्रवाक्यंज्ञेयम् ॥ १३ ॥
एवं नीतिप्रकारेण ॥ विदुरोधृतराष्ट्रं प्रतिउक्तवान् ॥ १४ ॥

श्रीमद्वीरराघवाचार्य्य कृत भागवतचन्द्रिका ॥

यदेतिपार्थैर्युधिष्ठिरेणप्रहितः जगतोगुरुः धर्मोपदेष्टाभगवान् श्रीकृष्णः सभायांयानिपुंसांभीष्मादीनाममृतायनान्यमृतस्रावीणि वचांसिजगाद तानिवचांसियदाराजा धृतराष्ट्रोनोरुमेनेनवहु मेनेतदायादित्यस्वयःकथंभूतोराजाक्षतपुण्यलेशः क्षतोविनष्टःपुण्यस्यलेशोयस्यसः ॥ ९ ॥
यदेति अग्रजापूर्वजेनधृतराष्ट्रेणामंत्राय उपहूतः उपसमीपेहूतः आहूतः भवनगृहंप्रविष्टः मंत्रदर्शांमंत्रविदांमध्येवरीयान् श्रेष्ठोविपश्चिन्मंत्रं समालोचनंप्रतिपृष्टः मंत्रदर्शांमंत्रविदांमध्येवरीयान्विदुरः अथ प्रश्नानंतरमुवाच मंत्रमेवाहयत्यतः वैदुरिकंविदुरो कर्मेवमंत्रिणः इतरेसर्वेमंत्रिणः वदंति ॥ १० ॥
पृष्टः किमाहेत्यतआह अजातशत्रोरितित्रिभिःदुर्विषहंसोढुमशक्यंतवागःअपराधंतितिक्षतोमृष्यतःअजातशत्रोर्दायंप्रतियच्छअसमर्थ परंतितिक्षुत्वैवभवितव्यमित्यत आह सहानुजः अनुजैरर्जुनादिभिः सहितः वृकोदरः भीमः सएवाहिः सोरुषाश्वसन्यत्राजातशत्रुसंनिधौवर्त्तते यद्यस्माद्वृकोदरात्त्वमलं नितरांविभेषियंत्वमित्यपिपाठः तदायंप्रतिविभेषीत्यर्थः ॥ ११ ॥
भगवत्सहायानां पार्थानां वलीयस्त्वं किमुवक्तव्यमित्याह पार्थानिति देवःभगवान्समग्रज्ञानशक्त्यादिसंपन्नः मुकुंदः श्रीकृष्णः पार्थान् गृहीतवान् ममप्राणाहि पांडवा इत्यभिमानविशेषेण परिगृहीतवान् गृह्णातुभगवांस्ततोपि किमित्यतआह स भगवानृक्षिति देवाः ब्राह्मणास्तेषां देवः ब्रह्मण्य इत्यर्थः यत्र भगवान् ब्रह्मण्योव संतत्रश्रीर्विजयोभूतिरिति न्यायेन तत्रैव विजयइत्यर्थः दूरस्थेन भगवता किंभवितव्यं इति मावोचइत्याह स्वपुर्यामेवास्ते आस्तांस्वपुर्यांतथाप्येकेन तेन किं इत्यतआह यदुदेवदेवः यदुदेवाः यदुश्रेष्ठ सात्यकिप्रद्युम्नानिरुद्धादयः तेषांदेवः प्रभुः यादवास्तत्संनिधौ वेवासते इत्यर्थः यादवतुल्यायोद्धारोमत्संनिधावपि संतीत्यतआह विनिर्जिताशेषनृदेवदेवः विनिर्जिताअशेषाः नृदेवाः राजानः येस्तेषामपि देवइत्यर्थः समस्तदिग्विजेतॄणामपिप्रभुः ॥ १२ ॥
एवं भगवत्सहायानां पार्थानामजेयत्वमभिधायस्वकुलविनाशको भगवद्द्वेषीत्वत्सुतो निर्वास्यतामित्याह यंदुर्योधनमपत्यबुद्ध्या त्वंपुष्णासिसएषदुर्योधनः दोषप्रचुरः त्वदीयपापराशिरेवापत्यरूपेणमूर्त्तः सन्गृहान्प्रविष्टः कुतः यतः पुरुषद्विड्भगवद्द्वेषी आस्तिकथंभूतः पुष्णासिकृष्णाद्विमुखः अतएवगतश्रीः अतआश्वशैवममंगलमेनंदुर्योधनंकुलकौशलायत्यजेदेकं कुलस्यार्थे इतिन्यायेन स्वकुलनिष्टनिवृत्तयेत्यजेति आश्वथेन आश्वसव्यमित्यपिपाठः आश्वेन दुर्योधनमपीत्यर्थः असेव्यमुखं तमाशुत्यजेत्यर्थः ॥ १३ ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ।

इति समूचिवान् विदुर इतिशेषः अथैतस्यगृहत्यागं वक्ष्यंस्तस्मिन्साक्षात्परकृताभिभवमाह तत्रविदुरेसौवमुच्यमाने प्रवृद्धकोपस्फुरिताधरेण प्रवृद्धः यःकोपः तेनस्फुरितश्चंचल अधरोयस्य तेन सकर्णानुजसौवलेनकर्णदुःशासनशकुनिसहितेन दुर्योधनेन सद्भिः स्पृहणीयं शीलंयस्य सः सत्ताऽसत्कृतः तिरस्कृतः ॥ १४ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

चतुर्थहेतुमाह यदात्विति पार्थेनयुधिष्ठिरेण प्रहितःप्रेषितःपुंसामर्मृतायनानिमोक्षादिसकलपुरुषार्थसाधनानि हतःपुण्यलेशोयस्य सतथा लिशअल्पीभावइतिधातुः अनेनपापंबहुलंपुण्यमल्पंतदपिनष्टमित्युक्तंभवति इदमेवसुखलेशविनाशकारणमित्यस्मिन्नर्थेतुशब्दः गुरुभात्रस्यापिवाक्यंग्राह्यंकिमुजगद्गुरोरित्याभिप्रायेणतथोक्तम्॥९

ततःकिंविदुरस्यतीर्थयात्रायामित्यतोविशेषहेतुमाह यदेति पूर्वजेनज्येष्ठेनयदोपहूतोभवनंप्रविष्टोविदुरो मंत्रायस्वकर्तव्यतालोचनायपृष्टःकिंकार्यंतद्ब्रूहिइति अथतदामंत्रदृशांमंत्रज्ञानांवरीयांस्तंधृतराष्ट्रमाह मंत्रदृग्वरीयस्त्वंकुतइतितत्राह यदिति वैदुरिकंविदुरेणोक्तंयद्यस्मात्तस्मादितिशेषः कृष्णोसंधिकार्यमनुत्पाद्योपप्लव्यंगतेसत्युपहूतइत्यस्मिन्नर्थेकिलशब्दः ॥ १० ॥

किमाहेतितत्राह अजातशत्रोरिति प्रतियच्छप्रदेहि प्रदानेहेतुमाह सहानुजइति हिशब्दोहेत्वर्थः यत्रयस्ययुधिष्ठिरस्याभिप्रेतसाधकइतिशेषः किमसौयमइतितत्राह यमितियंभीमंप्रति अत्रापिहेतुमाह स्वशत्रुहेति स्वस्यराज्यलक्षणद्रव्यस्यशत्रवोदुर्योधनादयस्तान्हतवानितितिनिश्चितत्वात्तथाप्रयोगः ॥ ११ ॥

राज्यप्रदानेबलवद्धेत्वंतरंचाह यदात्विति क्षितिदेवाःब्राह्मणाः तेषांदेवःपूज्यः मुक्तिमपिददातिकिमुराज्यमित्यतोमुकुंदइतिएवंविधसामर्थ्यवान्पार्थान्गृहीतवानिति यदातस्माच्च सोपिनदूरस्थइत्याहआस्तइति स्वबांधवानांपुर्यामुपप्लाव्याख्यायामास्तइति यस्मात्तस्माच्च सोप्रतसावसरइत्याह विनिर्जितेति ॥ १२ ॥

पुत्रसंवादाभावाद्युधिष्ठिरायराज्यंनदत्तमितिधृतराष्ट्राभिप्रायंविद्वान्विदुरोविष्णुवैष्णवद्वेषिणः पुत्रस्यापिपरित्यागःश्रेयानितिवक्तिसएषइतिहेज्येष्ठत्वंयमपत्यमत्यानपततिकुलंयस्मात्तदपत्यमितिबुद्ध्यापुष्णासिसएषदोषोगृहंप्रविष्ट आस्तइत्यन्वयःकीदृशोदोषःपापात्मापुरुषपूर्णाषड्गुणाविष्णुद्वेष्टीतिपुरुषद्विट् कुतःकृष्णाद्विमुखः उपलक्षणमेतत् तद्भक्तविमुखश्चातएवगतश्रीःश्रीप्रसादरहितः यतएवंविधोऽथ तस्मात् कुलकौशलायाशुकालक्षेपमंतरेणैनं दुर्योधनं त्यजेत्यन्वयः ॥ १३ ॥

स्ववचनादिकंधृतराष्ट्रेणानांगीकृतमित्येतावता विदुरस्यतीर्थयात्राकारणविरागहेतुःकःप्राप्तइतितत्राह इतीति इतिशब्दआदिवचनः एवमादिवाक्यमुक्तवान्प्रकारवचनोवा स्फुरणंसंचलनं तत्रज्येष्ठस्यपुरतःअसत्कृतोधिक्कृतः ॥ १४ ॥

---

श्रीमद्वल्लभाचार्य्य कृत सुबोधिनी ।

एवंत्रिदोषव्याप्तो भगवद्वाक्यंनांगीकृतवानित्याह यदाचपार्थ इतिपृथासंबंधात्प्रेषणमात्यंतानुचितं स्वतोनदत्तवानेवयदाचनदत्तवांस्तदापार्थिवेनयुधिष्ठिरेणप्रहितःप्रेषितोभगवान्यानिजगाद्तानिनोऽरुमनेइतिसंबंधःस भावामित्युक्तेलोकप्रसीत्या विनान्यथाकथनं जगद्गुरितिसर्वेषां हितोपदेशकर्तृत्वात्परमार्थतोऽपिनान्यथाकरणंनिजगादेति संध्यनुगुणतया गवद्धवाक्यानिजगद्गुरुप्रतिपाद्नार्थंधर्मांतरेणान्यथाश्रवणव्यावृत्त्यर्थं सर्वेषामेवतानिवाक्यानिसर्वदुःखनिवर्तकानीत्याहअमृतायनानीतिअमृतस्यायमानिस्थानभूतानिअमृतकुंभिकाइत्यर्थः यथाक्षीरसागरंमथित्वाऽमृतकलशमुद्धृतवान् एवंसर्वशास्त्राणिमथित्वातानिवाक्यान्युद्धृत्यजगादोक्तवानित्यर्थः । राजत्वादज्ञानशेषःपूर्वंजीवनंसुकृतं राज्यभोगसुकृतं जीवन्पुत्रसुकृतं चेतिलेशत्रयंस्थिततन्मध्येहृताःपुण्यलेशाःयस्यसतथोक्तःगुरुत्वंमाननायांनकश्चनार्थकारोभवेदितिभावः जीवनंविद्यमानमपिगतप्रायंसुचितंपुण्यांशस्यगतत्वात्केवलंपापांशेनजीवतीतिभावः ॥ ९ ॥

एवंपुत्रस्नेहेनभगवद्वाक्योल्लंघनेकृतेतत्प्रभृतिस्वतस्तद्गृहेगच्छन्नपि यदोपहूतआकारितस्तदाभवनंप्रविष्टइत्याह यदेति तदनंतरंमंत्रार्थं पृष्टः किलेतिवचनंस्वस्यतथानुसंधानव्यर्थंगूढार्थभावकत्वादनात्मत्वंस्यादितितन्निराकरणार्थमुक्तंपूर्वजेनेति कथनावश्यकत्वं तथाभिन्नप्रक्रमेणोक्तवानित्याहअथाहेतिसंबंधादिकमनपेक्ष्यभयादिकमनपेक्ष्याथस्वतंत्रतयाऽऽहतस्यमंत्रस्यप्रसिद्धिमाहतामितितादृशकथनेहेतुः मंत्रदृशांवरीयानिति यथावेदसएतंमंत्रमपश्यदितिबृहस्पतिप्रभृतयोमंत्रद्रष्टारोभवंतितथानीतिशास्त्रेपियमंत्रद्रष्टारस्तेषांमध्यवरीयान्किंचास्य मंत्रस्यसर्वलोकप्रसिद्धिरस्तीत्याहयन्मांत्रणाइतिविदुरेणप्रोक्तंवैदुरिकामिति तेनप्रोक्तमित्यधिकारासिद्धत्वात्सर्वजनीनप्रसिद्धिः ॥ १० ॥

मंत्रमेवाह अजातशत्रोरिति उपायचतुष्टयमध्येदानमेव मंत्रदायमिति नहीनता अजातशत्रोरिति पठितःशंकाभावः तस्याजातशत्रुत्वं नकेवलं नामतः किंतुकायतोऽपीत्याह अन्यैर्दुर्विषहमपराधं सहतइति अजातशत्रुत्वादेवादान मस्त्वित्याशंक्यभीममुपकथापयति सहानुज इति अनुजैः सहवर्त्तत इति सादेशाभावः अर्जुनादीनामपिक्रूरत्वं सूचितं यत्रयस्यराज्ञो निकटे रुषाश्वसन्वृकोदरनामाहिरस्ति नाहिसर्पवैरं कार्यमकृत्वानिवर्तते तस्मात्तत्संतोषार्थं दायंदेयमित्यर्थः ननुतेचत्वारः किंकरिष्यंति ममतादृशाः शतंपुत्राः संतीत्याशंक्याह सत्वमलंबिभेषीति यस्माद्भीमादेकस्मादपित्वमलं बिभेष्याकाशवाणीश्रवणादेकएव भीमः सर्वान्मारयिष्यतीतिशतमप्यप्रयोजकं विपरीतशंकापि निवारिता आस्त इत्यर्थो दत्तेन भेदोदंडश्च निवारितः दायत्वाच्चादानेनसाम ॥ ११ ॥

सहायाभावमाशंक्यैकसहायेनैव त्रैलोक्यजयसामर्थ्ये विद्यमाने पार्थांस्तुदेवइति सहायार्थंपार्थप्रार्थनापि नापेक्षतेतुपुनःस्वयमेव गृहीतवान् पार्थानिति संबंधन बहुवचने च सर्वथातदुद्योगोलक्ष्यते नहिबहून् स्वकीयान् गृहीत्वाकश्चित्तूष्णींतिष्ठति देवत्वान्नमानुषैर्जेतुंशक्यः अतएव दुर्योधनस्य दैत्यत्वान्मारणमपिगम्यते देवदैत्यानामजेयत्वायभगवानिति अनेनपार्थकर्मापि चेद्विपरीतं भवेत्तदप्यन्यथा कुर्यादितिसूचितं कालजयायमुकुंदइति अन्येषामपि दुःखं दूरीकृत्यमोक्षदातुः कालजयः किंवक्तव्यमित्यर्थः अनेनराज्यदानं चावश्यकमितिज्ञापितं किंचसभगवान् क्षितिदेवदेवइतिक्षितिदेवाः ब्राह्मणास्तेषामपि देवस्तद्धितकर्तृत्वादतो यत्रभगवांस्तत्रैव ब्राह्मणाअपि सहायाः किंच आस्तेस्वपुर्यांयदुदेवदेव इति भगवान्स्मृतोध्यातो वासर्वमनिष्टं निवार्यराज्यादिकं प्रयच्छति तद्गत्वादेव भक्तानां हितार्थेनभक्तपुर्यामास्ते किंच यदुदेवायादवाः यदोर्वंशे उत्पन्ना देवाइति तेषामपि देव इति यत्रभगवांस्तत्रैव यादवाइति तवबंधुसहायोऽपि नास्तीत्युक्तं किंच विनिर्जिताशेषनृदेवदेव इति नृदेवाराजानस्ते सर्वे विशेषेण निर्जितायेनतमपि विजिगीषतइति भावः ॥ १२ ॥

दुर्योधनोनमन्यत इति चे तमाह स एष दोषः इति प्रसिद्ध

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

त्रिदोषोऽयमेव दोष इति वचनात्संदर्नगींकारो न बाधको दोषः सर्वैरुपायैस्त्याज्योनतुदोषाद्युरीभूतोऽपि त्याज्यमिति भावः तस्य दोषत्वेहेतुमाह पुरुषद्विडितियः पुरुषं द्वेष्टि स दोषः अन्यथा तस्यैव शरीरेतन्नियम्ये स्वयंस्थितः कथनद्वेष्टि यस्य राज्ये ग्रासेऽपि स्थितस्तत्र द्वेष्टितत्र शरीरे म्रियमाणो रोगमूर्त्तेर्यद्दृष्याद्वतः पुरुष दोषाद्दोष इत्यवसीयते ॥ तत्त्याग उपपत्ति रूपोनिदान मित्यर्थः आस्त इति शीघ्रं तस्य प्रतीकारः कर्त्तव्यः सांप्रतं सुकार्यमकृत्वे वतूष्णीं तिष्ठति उपेक्षितस्तुकुलमेवनाशयिष्यतीति भावः कास्तीत्याकांक्षायामाह सर्वत्रैवतावकान् गृहान् प्रविष्टः स्वास्ते ममत्वात् सर्वगृहप्रवेशनेनिवारणाशक्तिः अयमिति दूरेस्थितमंगुल्यानिर्दिशति तथा प्यंभस्वात्तत्त्रत्सेति प्रकारांतरेण बोधयति यमपत्यमत्या त्वं पुष्णासि आपद्भ्यस्त्रायत इत्यपत्यं तन्मतिरेव किंचत्वंचकृष्णाद्विमुखोयतः पुष्णासि अतएव गतश्रीश्चभविष्यसि तस्मादस्य सर्वानर्थ मूलत्वात्त्यजेदेकं कुलस्यार्थे इतिन्यायादेनंत्यज चकारात्कृष्णावैमुख्यंचत्यजेत्यर्थः ॥ १३ ॥

यदेवमाक्रोशपूर्वकमाज्ञारूपेणोक्तवांस्तदा ऽसत्कृतइत्यूचिवानितिसंबंधःइत्यूचिवानित्यिसमिर्भः तत्रस्थानेऽनागतेनभ्रातृसंतिकेवासुयोधनइतितस्यापकर्षार्थवचनं ननुपितृव्यतिरस्कारंकथंकृतवानित्याशंक्याह: क्रोधेनवाहिदुष्टैराक्रांतत्वादितितृतीयांतंविशेषणद्वयंप्रवृद्धो यः कोपस्तेन स्फुरितमधरंयस्य अनेनक्रोधनलोभएवस्फुरितइति तदुक्तौदानरूपउपायोऽप्यतोनसंमतइतिसूचितंअसत्कारोऽत्रवक्तव्यो वापवमप्रियकथनंधर्मनीतिविरुद्धं सत्यंब्रूयात्प्रियंब्रूयादिति स्मृतेःप्रधान परित्यागश्चनीतिविरुद्धः सोऽपिसन्माननेनैवबाधनीयोभवतितथा प्येववचनंपरित्यागार्थमतदभिसंधायाह सत्स्पृहणीपइतिसाद्भिःस्पृहणीयंशीलंयस्यएवमेवासद्भिः सहस्थितौतत्परित्यागार्थमेवंकर्तव्य मितिसत्स्पृहणीयताश्रुत्तेतिविश्वासपात्रत्वंसूचितं दुष्टचतुष्टयमध्येदुर्योधनोमुख्यः कर्णदुःशासनशकुनयस्तुसहायास्तदाह तैः सहितइति अथवानुमंत्रस्यस्वाहितत्वादंगीकारमेव कथंनकृतवानित्या हसद्भिरेवस्पृहणीयंशीलं यस्येति तस्यपरिचारस्यासत्वादितिभावः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

इदानीं विदुरस्यैव पराभवं तत्कृतं दर्शयति षड्भिः । अथानन्तरं विदुरः तदाह किं मन्त्रिणोऽद्यापि यत् वैदुरिकं विदुरवाक्यमिति प्रसिद्धं वदन्ति ॥ ९ ॥

तदेवाह अजातेति यत् यत्र आगसि वृकोदररूपोऽहिः क्रोधेन श्वसन् वर्त्तते । यत् यस्मात् त्वमलमत्यर्थं बिभेषि ॥ १० ॥

संप्रति त्वन्यदप्यद्भुतं तेषां महावलाभिषयं शृणिवत्याह पार्थांस्त्विति । आत्मीयत्वेन गृहीतवान् स च देवः तत्रापि भगवान् क्षितिदेवविप्रदेवैश्च सहितः तत् पञ्च एव विप्रा देवाश्चेति भावः । तत्रापि स्वपुर्यामेवास्ते नत्वन्यत्र गतः । यदुदेवा यदुप्रवरा देवा इव वलिष्ठा यस्मात् सः । यत्रासौ तत्रैव यदुप्रवीरा इत्यर्थः । किञ्च तस्यैव वलं शृणिवत्याह विनिर्जिता अशेषा नृदेवाः कंसजरासन्धादयो देवाश्च वाल्यमारभ्यैव ब्रह्मेन्द्रवरुणरुद्रादयो येन सः । अतः पार्थानां दायं देहि यद्यात्मनो भद्रमिच्छसीति भावः ॥ ११ ॥

ननु पुत्रो दुर्योधनोऽत्र विप्रतिपत्स्यते इति चेत्तत्राह सएष इति त्वत्कोटिजन्मकृत दुष्कृतफलभूत इत्यर्थः । दोषो मूर्त्तएव यतः पुरुषं परमेश्वरं द्विष्टि तत्रापि तव गृहान् वाह्यान् अभ्यन्तरान् मनोबुद्ध्यादिरूपानपि प्रविष्ट एवास्ते तत्रापि त्वं तं पुष्णासि तत्राप्यपत्यमत्या नह्यसावपत्यं नपतत्यस्मादित्यपत्यमिति निरुक्तेः । अतएव त्वमनुमीयसे कृष्णाद्विमुखः गतश्रीरिति लक्ष्मीस्तव गृहेभ्यो निःसृत्य गतेति जानीहि । ननु तर्हि कोऽत्र प्रतीकारस्तत्राह आशु शीघ्रमशैवममंगलमेनं त्यज ननु मया पित्रा पुत्रस्य त्यागे मत्कुले कलंकः स्यात् तत्राह । कुलस्यैव कौशलाय त्यजेदेकं कुलस्यार्थे इति न्यायात् । अन्यथा कुलमेव सर्वं ते नंक्ष्यतीति भावः ॥ १२ ॥

इत्यूचिवान् एवमुक्तवान् विदुरः सुयोधनेन असत्कृतः तिरस्कृतः कर्णदुःशासन शकुनिसहितेन ॥ १३ ॥

तिरस्कारमेवाह क एनमत्र महाराजसदसि आजुहावेति आह्वानानर्हमिति भावः । तत्र हेतुः दास्याः सुतमिति जन्मनैव दुष्टं । जिह्मं कुटिलमिति । कर्मणापि कौटिल्यमाह । यद्वलिना यद्सेनान्नेन पुष्टस्तस्मिन्नेव स्वस्वामिनि प्रतीपः प्रतिकूलः परेषां शत्रूणां कृत्ये कार्ये वर्त्तते । अतोऽयमत्र स्थितः सर्वमेवास्मत्कुलं नाशयितुं यतिष्यत इति भावः । निर्वास्यतां अयमितो निष्काश्यतां यः कोऽप्यत्र मदीयो वर्त्तते तेनेति भावः । तत्राप्याशु मा विलम्वेन तत्रापि श्वसानः श्वासमात्रावशिष्ट इति सर्वथैवेत्र प्रहारमिति भावः । श्मशान इति पाठे श्मशानवदमंगलोऽयं केनास्मत्गृहमध्ये आनीतो यो मामेवामंगलं वक्ति । अत आशु निष्काश्यतामन्यथा राजपुरमिदं श्मशानमेव करिष्यतीति भावः ॥ १४ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

राजा धृतराष्ट्रः मन्त्रायनानिश्रेयोमूलानि ॥ ९ ॥

पूर्वजेनधृतराष्ट्रेणमंत्रिणोचवैदुरिकं विदुरवाक्यंवदंतितदाह ॥ १० ॥

यद्यस्मान्महावलात्त्वमलमत्यर्थंविभेषि सवृकोदराख्योऽहिः सानुजः अर्जुनादिसहितः यत्रागसिक्रोधेनश्वसन्नास्तेतत्तवाग अपराधंतितिक्षतः सहमानस्य अजातशत्रोः युधिष्ठिरस्यदायं प्रतियच्छप्रत्यर्पय ॥ ११ ॥

तद्दायप्रत्यर्पणंतवयशोऽर्थंपांडवास्तु श्रीकृष्णप्रियाअतः कृतार्थाएवेत्याशयेनाह पार्थांस्त्विति ॥ १२ ॥

दुर्योधनस्तद्दायप्रदानमंगीकरोत्यतआह सइति योजन्मकालेक्ष्वेलितान् शब्दान्कुलनाशसूचकानकरोत् तदेवमयाप्रार्थितोऽपवार पुत्रंदोषरूपत्यजेति एवं मयावार्यमाणोऽपियमपत्यबुद्ध्यापुष्णासिस एषमूर्त्तोदोषएवगृहान्प्रविष्टआस्तेदोषत्वेहेतुमाह पुरुषान् युधिष्ठिरादीन् श्रीकृष्णमियान् द्वेष्टीतिसतथा कृष्णाद्विमुखश्चेति तस्मात् अशैवममंगलं दुर्योधनमाशुत्यज कथंपुत्रस्त्याज्यइत्यत्राह कुल कौशलायेति त्यजेदेकंकुलस्यार्थेग्रामस्यार्थेकुलंत्यजेत्ग्रामंजनपदस्यार्थेआत्मार्थे पृथिवींत्यजेदितिन्यायात् ॥ १३ ॥

सूचिवान्विदुरः इतीत्थम् ऊचिवान् तत्रसभायामेवकर्णदुःशासन शकुनिसहितेनसुयोधनेन दुर्योधनेन असत्कृतः तिरस्कृतः ॥ १४ ॥

---

भाषा टीका ।

और जब युधिष्ठिर के भेजे हुये जगद्गुरु श्री कृष्ण सभा में पुरुषों को अमृत तुल्य वचन कहते हुये उन वचनों को नष्ट है पुण्य लेश जिस का ऐसे राजा धृतराष्ट्र नहीं माने ॥ ९ ॥ और जब ज्येष्ठ भ्राता धृतराष्ट्र श्री विदुर जी को घरमें बुलाय कर मंत्र पूछा तब मंत्र देखने वालों में श्रेष्ठ श्री विदुर जी जो मंत्र कहते हुये जिस को मंत्री लोग वैदुरिक मंत्र कहते हैं ॥ १० ॥

स इत्थमत्युल्वणकर्णबाणैर्भ्रातुः पुरो मर्म्मसु ताडितोऽपि ।
स्वयं धनुर्द्वारि निधाय मायां गतव्यथोऽयादुरुमानयानः ॥ १५ ॥
स निर्गतः कौरवपुण्यलब्धो गजाह्वयात्तीर्थपदः पदानि ।
अन्वाक्रमत् पुण्यचिकीर्षयोर्व्यामधिष्ठितो यानि सहस्रमूर्त्तिः ॥ १६ ॥
पुरेषु पुण्योपवनाद्रिकुञ्जेष्वपङ्कतोयेषु सरित्सरःसु ।
अनन्तलिङ्गैः समलङ्कृतेषु चचार तीर्थायतनेष्वनन्यः ॥ १७ ॥
गां पर्यटन् मेध्यविविक्तवृत्तिः सदाप्लुतोऽधःशयनोऽवधूतः ।
अलक्षितः स्वैरवधूतवेषो व्रतानि चेरे हरितोषणानि ॥ १८ ॥
इत्थं व्रजन् भारतमेव वर्षं कालेन यावद् गतवान् प्रभासम् ।
तावच्छशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः ॥ १९ ॥
तत्राथ शुश्राव सुहृद्विनष्टिं वनं यथा वेणुजवह्निसंश्रयम् ।
संस्पर्द्धया दग्धमथानुशोचन् सरस्वतीं प्रत्यगियाय तूष्णीम् ॥ २० ॥

भाषाटीका ।

तुह्मारे दुस्सह अपराधसहनेवाले श्रीयुधिष्ठिरजीको राज्यभाग दीजिये क्योंकि भाइयोंसहित भीमसेनरूपसर्प क्रोध ह्यो श्वास लेरह्या है जिससे तुम अत्यन्त डरते हो ॥ ११ ॥

और पार्थ युधिष्ठिरादिकोंको तौ देव और सब राजोंके देव और यादवोंके देव और सब राजोंको जीतनेवाले मुकुंद श्रीकृष्ण आत्मीयत्वसे ग्रहण करलिया है ॥ १२ ॥

सो यह पुरुष श्रीकृष्णसे द्वेष करनेवाला दोषरूप दुर्योधन तुह्मारे घरोंमें प्रविष्ट है सो कृष्ण से विमुख गतश्री तुम जिसको पोषण करते हो पुत्रमति से सो इस दुर्योधन अमंगलको अपने कुलके हितार्थ शीघ्र त्याग करिये ॥ १३ ॥

साधुवों के स्पृहणीय शीलवाले विदुरजी इस तरह कहकर चुप होगये तब प्रवृद्ध कोपसे फडकता है अधरोष्ठ जिसका और कर्ण दुःशासन शकुनि सहित दुर्योधनने बड़ा अनादर किया ॥ १४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

अत्युल्वणैः कर्णयोर्बाणवत् प्रविशद्भिः परुषवाक्यैः मर्म्मसु ताडितोऽपि गतव्यथः । तत्र हेतुः मायां उरु बहुमानयन् अहो मायाया माहात्म्यमिति । तामेव तत्र हेतुं मन्यमानः तन्निःसारणात् पूर्वं स्वयमेव अयात् निर्जगाम । किं कृत्वा एते नूनं मरिष्यन्ति किं धनुषेति तस्य द्वारि धनुर्निधाय । यद्वा भीमादिभिः संगत्याऽस्माभि र्योत्स्यत इति माशंकिष्टेति धनुर्निधानम् ॥ १५ ॥

ततो निर्गतस्य तीर्थाटनप्रकारमाह स इत्यष्टभिः । स गजाह्वयान्निर्गतः सन् तीर्थं पादौ यस्य तस्य हरेः पदानि क्षेत्राणि पुण्यचिकीर्षयाऽन्वाक्रमत् प्रत्यपद्यत । कौरवाणां पुण्येन लब्ध इति तेषां भाग्यमेव तेन रूपेण गतमिति सूचितं । उर्व्यां सहस्रमूर्त्तिः ब्रह्मरुद्राद्यनेकमूर्त्तिः सन् तीर्थपात् यानि अधिष्ठाय स्थितः तानि तानि जगाम इत्यर्थः ॥ १६ ॥

पुण्यानि यान्युपवनाद्रीणि तेषु कुञ्जं लतादिगूढं स्थानं अपङ्कानि तोयानि येषां तेषु सरित्सरःसु च तीर्थेषु आयतनेषु च क्षेत्रेषु । कीदृशेषु अनन्तस्य लिङ्गैः मूर्त्तिभिः समलङ्कृतेषु अनन्य एकाकी ॥ १७ ॥

किञ्च । गां पर्यटन् हरितोषणानि व्रतानि चेरे अचरत् । मेध्या पवित्रा विविक्ता असंकीर्णा वृत्तिर्जीविका यस्य । सदाप्लुतः प्रतितीर्थं स्नातः अधःशयनं यस्य । अवधूतः असंस्कृतदेहः । अवधूतवेशो वल्कलादिधारी अतएव स्वैरलक्षितः ॥ १८ ॥

एकस्यैव चक्रं सैन्यं यस्यां । एकमेव राजचिह्नं श्वेतातपत्रं यस्यां तां । अजितेन श्रीकृष्णेन सहायेन ॥ १९ ॥

तत्र प्रभासे परस्परं संस्पर्द्धया निमित्तभूतया सुहृदां कौरवाणां विनष्टिं विनाशमशृणोत् । परस्परनाशे दृष्टान्तः । वेणुजे वह्निं संश्रयते यद्वनं तत् यथा दग्धं भवति तथा प्रत्यक् उद्गमाभिमुखम् ॥ २० ॥

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य तट्टिप्पणी ।

अत्र० मन्त्रसभायां ॥ तस्मिन्नेवान्नदातरि परेषां शत्रूणां युधिष्ठिरादीनां अंतःशत्रुकार्य्यपरत्वात् सर्वस्यश्व संस्त्वात्मकृतानुप्रयोगमाशंक्य व्यञ्जनयाऽऽचष्टे जम्भेनेति स्मशानइतिपाठान्तरम् ॥ १५ ॥

तत्र० गतव्यथत्वे हेतुः मायया मोहनशक्तेः तामेव मायामेव तत्र० स्वतिरस्कारे तन्निःसारणात् दुर्योधनादिकर्तृकनिःसारणात् एते भक्ताऽपराधिनो दुर्योधनादयः तस्य० धृतराष्ट्रस्य पूर्वाश्रममहानुभावस्यास्य परमरणसंकल्पानौचित्यमित्यरुचेर्यद्वेति ॥ १६ ॥

ततोऽगृहात् अधिपूर्वस्थाधातोः सकर्मकत्वेनकर्मप्रत्ययशंकां वारयितुमधिष्ठायस्थितइति कर्तृसाधनतया व्याख्यानादित्यर्थ इत्युक्तम् पुण्यचिकीर्षया भक्तापराधिसङ्गप्रायश्चित्तेच्छया अतो भक्तद्रोहिसंगलक्षणदोषग्रस्तमात्मानं मन्यमानस्सहसा श्रीकृष्णादर्शनार्थमपि नजगामेति ज्ञेयम् ॥ १७ ॥

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्य टिप्पणी ।

पुरेषुप्रसिद्धेष्वयोध्यादिषु अनन्यःएकलः सर्वत्रश्रीकृष्णैकस्फूर्त्तिमय इतिवा ॥ १८ ॥

असंकीर्णापरवृत्तिभिरसंमिश्रा अतएवावधूतवेशत्वादेव १९ ॥ २०

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रिका ॥

तिरस्कार प्रकारमेवाह कइति दास्याः सुतंजिह्मंकुटिलात्मानमेममत्रमंत्रेकउपजुहावाहूतवान् । जिह्मत्वंस्फुटयति यद्बलिनायस्यममबलिनाऽन्नेनैवपुष्टःसंवर्द्धितस्तस्मिन्मयिप्रतीपः प्रातिकूलः परकृतपरेषांशत्रूणांकृत्यकार्ये प्रथमांतत्वेऽप्यधिकरणबहुव्रीहिः शत्रुकार्यपर आस्तेवर्त्ततेअतः श्मशानःशून्यःयदुद्वत्रएतच्छ्मशानंयच्छून्य इतिश्रुतेःपुरान्निर्वास्यतांनिर्वाप्यताम् ॥ १५ ॥

सविदुरः अत्युल्वणैः कठिनैः भ्रातुः पुरः कर्णयोर्बाणवदायतैर्वाक्यैः ताडयन्ममर्मसुताडितोऽपिप्रव्यथितोपाविगतव्यथः । यं हि न व्यथयंत्येतेपुरुषंपुरुषर्षभइत्युक्तरीत्यागतव्यथः अतएवस्मयन्नीषद्धसन्नक्षयमितिपाठेधनुर्विशेषणं धनुः शरासनंद्वारिनिधायतथान्यथाटिष्यति ममकिंधनुषेतिबुद्ध्यानिधायमायांसर्वजनमोहिनींभगवन्मायांउरुमानयानःअहोमाया माहात्म्यमितिबहुमन्यमानः अयान्निर्गतः गृहादितिशेषः ॥ १६ ॥

एवंगृहत्यागहेतून्त्यागंचाभिधाय तस्यतीर्थाटनप्रकारमाह सइत्यष्टभिः कौरवपुण्यलब्धः सविदुरः गजाह्वयात्पद्भ्यांनिर्गतः कौरवपुण्यलब्धइत्यनेन तेषांभाग्यंतेनरूपेणनिर्गतमितिसूचितं तीर्थपदःतीर्थंगंगापादयस्यतस्यहरेःपदानिस्थानानिपुण्यंकर्तुमिच्छयाऽन्वाक्रमदनुचचारकानिपदानिउर्व्यांभूम्यांयानिपदानिसहस्रमूर्तिः सहस्राणिबहूनिमूर्त्तयोरंगेशवैकुंठशहयशीर्षादिरूपाणियस्यतथाभूतो भगवान् अधिष्ठितः अधिष्ठायास्थितः ॥ १७ ॥

पुरेषुपुण्योपवनानिचाद्रयश्चकुंजानिच तेषुतेष्वपंकानिनिर्मलानितोयानियेषुतेषुसरित्सरःसुसरितश्चसरांसि चतेष्वनंतस्यभगवतोलिंगैर्मूर्त्तिभिः सम्यगलंकृतेषुतीर्थायतनेष्वनन्यः अव्यभिचारितभगवद्भक्तियोगनिष्ठःचचारपर्यटन् ॥ १८ ॥

गांभूमिंपर्यटन्मेध्यैर्विविक्तैर्जीत्याश्रयनिमित्तादुष्टैरन्नादिभिर्वृत्तिराजीविकायस्यसः सदाआप्लुतःस्नातः अधःशयनंयस्यसःअवधूतः अभ्यंगोद्वर्तनादिदेहसंस्काररहितः स्वैः स्वदेहसंबंधिभिरलक्षितः अदृष्टः अवधूतानांवेषोवल्कलाजिनधारणादिरूपोयस्यसः हरितोषणानिहरिस्तोष्यतेएभिरितिहरितोषणानिव्रतानिचेरेऽचरत् ॥ १९ ॥

इत्थमिति भारतवर्षमेवइत्थंव्रजन्पर्यटन्कालेनयावद्यावताकालेनप्रभासंप्रभासतीर्थं प्रतिगतवान् विदुरस्तावंतं कालंपार्थोयुधिष्ठिरः अजितेनार्जुनेनसाकं श्रीकृष्णेनहेतुनावाएकातपत्रां एकमातपत्रंयस्यांतांएकचक्रांएकस्यैवचक्रंसैन्यंयस्यांतांक्षितिंशशासअनुशिष्टवान् ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

धिक्कारप्रकारमाह कएनमिति दास्याः सुतमित्याक्रोशेषष्ठी उपजुहावाहूतवान् जिह्मंवक्रहृदयं यस्यपुंसोवलिनाऽपवर्जितान्नेन तस्मिन्पुंसिप्रतीपोविरोधी परेषांममविरोधिनांपाण्डवानांकृत्येकार्ये आस्तेयस्मात्तस्मादितिशेषः निर्वास्यतांनिष्काश्यतां श्वसान्तःश्वासमात्रावशेषी स्वकृतोदोषः स्वस्यैवेतिसूचनायशानच्प्रयोगः ॥ ११ ॥

संभावितस्यताडनात्प्रागेवनिर्गममं श्रेयइति भावंश्लोकद्वयेनसूचयन्नाह सइति भ्रातुर्धृतराष्ट्रस्य स्मयन्मंदस्मितंकुर्वन् मायांपुत्रइत्यादिस्नेहलक्षणांहरेर्बंधकशक्तिं मुरुमानयानो बहुमन्वानः सोऽयाद्ययौ तीर्थमितिशेषः ॥ १६ ॥

पुण्यलब्धइत्यनेन हस्तिनापुरमपि पुण्यक्षेत्रमिति सूचयति तीर्थपदोहरेः पदानिस्थानानि सहस्रमूर्तिरनंतमूर्तिः तदेतत्सहस्रंतत्सर्वमितिश्रुतिः ॥ १७ ॥

एतदेवविशिनष्टि वनेष्विति तीर्थानां शुद्धजलानामायतनेषुस्थानेषु नित्यशुद्धस्यहरेः सन्निधानस्थानेषुवा पुण्यशब्दः प्रत्येकमभिसंबध्यते उपवनेषुपुरोपकंठवनेषु अद्रिषुश्रीपर्वतादिषु कुंजेषु सिंहगिरिप्रजाद्यणुतरपर्वतेषु वनेषुवृंदावनेषु सेव्यत्वेहेतुमाह अपंकेति सरित्सुगोदावर्यादिनदीषुसरःसुपुष्करादिषु अनंतस्यहरेर्लिंगैः प्रतिमाभिः सम्यगलंकृतेषु ॥ १८ ॥

चरणंविशिनष्टि गामिति गांभूमिं मेध्यैःशुद्धैःविविक्तैः पृथग्भूतैर्वृत्तत्स्पतितैः पत्रादिभिर्वृत्तिराजीविकाजीवनं यस्यसतथोक्तः यद्वा शुद्धएकांतस्थलेवृत्तिरवस्थानंयस्यसतथा अधःशयनेनस्थंडिलेशयनेनावधूतारजोरूषितदेहः स्वैः स्वकीयैरलक्षितोऽविज्ञातः अवधूता वायुनोद्धूताः केशायस्यसतथा यद्वापाठांतरे अवधूतवेषवद्वेषोयस्य सतथा कीदृशानिव्रतानि हरितोषणानि यानियानिव्रतानिचेरेतानि तानिसर्वाण्यपि हरिप्रसादजनकानीत्यर्थः अनेनोद्देश्यव्रतदेवतावशीकरणसमर्थानीति व्रतशब्दनिर्वचनंसूचितं वृञ्वरणइति धातोर्व्रियतेनेनैतादित्यस्मिन्नर्थेव्रतमिति रूपंसिध्यति ॥ १९ ॥

कर्मभूमित्वाद्भारतवर्षमेवाटितवान् नान्यदित्यस्मिन्नर्थे एवशब्दः केनचित्कालेन यावद्यदातावत्तदापार्थोऽजितेनकृष्णेनोक्तविधिनैकचक्रामेकाज्ञां एकमेवातपत्रं श्वेतच्छत्रं यत्रसातथातां क्षितिंनिवासगत्योरितिधातोः सर्वत्रसन्निवासः सुगमनंचोराद्युपद्रवोनास्तीत्येतत्सूचनायक्षितिमिति प्रायोजि इत्थमित्यनेन नियमभंगोनास्तीति सूच्यते ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

स्वयमित्यत्र स्मयदिति चित्सुखः ॥ १५ ॥

अन्वामक्रत अनुक्रमेण प्राप । पुण्यचिकीर्षया तद्दुःसंगप्रायश्चित्तेच्छया । अतः सदोषम्मन्यःसहसा श्रीकृष्णमपि न जगामेति भावः ॥ १६ ॥

पुरेषु अयोध्यादिषु प्रसिद्धेषु न विद्यते पङ्कं पापं येभ्यस्तेषु पापहन्तृषु तोयेषु अनन्यः सर्वत्र श्रीकृष्णैकदृष्टिः ॥ १७ ॥

विविक्तत्वं परवृत्तिभिरमिश्रत्वम् ॥ १८ ॥

भारतमेव वर्षमिति तन्मध्यवर्त्ति कुमारिकाखण्डमेव ज्ञेयं विष्णुपुराणानुसारेणान्यत्रागम्यत्वात् ॥ १९ ॥

सुहृद्विनष्टिमिति यादवानां विनाष्टमित्येव ज्ञेयं । नातिविलम्बादेवोद्धवेन मिलनात् ॥ २०—२३ ॥

---

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ॥

कएनमिति लोकोक्त्यासाधिक्षेपः पित्रासमाहूतत्वंज्ञात्वा युक्तकरणात्तमथाक्षिपतीति ज्ञायतेस्वभावजाति क्रियादुष्टस्यमंत्रानर्हत्वात् अयंतुतादृश इति विशेषेणात्रयंसिद्धं क्रियैवतृतीया जिह्मः कुटिलःछिद्रान्वेषीमयाकापत्येतस्यातव्यं विश्वासंजनयता स्वावसरेऽपकर्त्तव्यमितिजिह्मलक्षणं तदद्यविदुरेस्पष्टंजानं स्वाधिकारानुसारेणाभ

